सोमंभूंजन्हरिभ्यांधानाःसूपस्थाअद्यदेवोवनस्पतिरभवदग्नयआज्येनसोमायाज्येनाग्नयेछागेनेंद्रायसो-
मेनहरिभ्यांधानाभिरघत्तंमेदस्तःप्रतिपचताग्रभीदवीवृधतपुरोळाशैरद्यादिंद्रःसोमंगवाशिरंयवाशिरंतीव्रं
तंवहुरमध्यमुपोत्थामदाश्रौद्दिमदाँआनळवीदृधतांगूषैस्त्वामद्यर्षआर्षेयऋषीणांनपादवृणीतायंसुन्वन्य
जमानोवहुभ्यआसंगथेभ्यः ॥ एषमेदेवेषुवसुवार्यायक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यस्माआच-
शास्वाचगुरस्वेषितश्चहोनरसिभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकायसूक्ताब्रूहि ॥६५॥ धानांसोमाना
मिन्द्राद्धिचपिबचबध्वांतंहरीधानाउपऋजीषंजिघ्रतामारथचर्षणेसिंचस्वयत्त्वापृच्छाद्विषन्पत्नीःकामी-
मदथाइत्यस्मिन्सुन्वतियजमानेतस्मैकिमराथाः सुष्टुसुवीर्यंयज्ञस्यागुरउदृचयद्यदृचीकमतोनोतत्तथा-
भूद्धोतर्यज ॥ ६६ ॥ होतायक्षदश्विनासोमानांतिरोअह्न्यानांत्रिर्वर्तिर्यातंत्रिरिहमादयेथाम्सुतोतुरीयं
नासत्यावाजिनायधेनुःसजूरश्वीरोहिदश्वोघृतस्नुःसजूरुषाअरुणीभिःसजूः सूर्यएतशेनसजोषावश्विनादं
सोभिःकरतएवाश्विनाजुषेतांमदेतांपिबतांसोमंहोतर्यज ॥ ६७ ॥ होतायक्षदश्विनासरस्वतीमिंद्रंसु

त्रामाणंसोमानांसुराम्णांजुषतांव्यंतुपिबंतुमदंतुसोमान्सुराम्णोहोतर्यज ॥ ६८ ॥ होतायक्षत्प्रजापतिं महिम्नोजुषतांवेतुपिबतुसोमंहोतर्यज॥६९॥इतिप्रैषाध्यायःसमाप्तः ॥ ७ ॥ ॥ ॥ ७ ॥ ॥

# इति ऋक्संहिता समाप्ता.

इयं गणपतकृष्णाजीमुद्रायंत्रालयाधिकारिणा आत्मारामकान्होबाभिख्येन गोरेत्युपाह्वशिवरामशास्त्रिप्रभृतिभिः सम्यक् शोधयित्वा सप्ताब्धिवसुवसुधामिते ( १८४७ ) सन्संज्ञकाब्दे कृतविंशतितम ( २० ) राजकीयनियमानुरोधतस्तथा मुनिरसगजेंदुमिते ( १८६७ ) सन्संज्ञकवत्सरे कृतराजकीयपंचविंशतितम ( २५ ) नियमानुसारतोराजकीयपट्टे निवेशनेनासाधारणीकृत्य द्विगेंदुवसुवसुधामिते ( १८१२ ) विकृतिनामकसंवत्सरे आश्वयुजि स्वीयमुद्रायंत्रालये मुद्रिता.



हा ग्रंथ जनार्दन महादेव गुर्जर—रामवाडी मुंबई—ह्यांचे दुकानीं विकत मिळेल.